# ॥ राहुपञ्चविंशतिनामस्तोत्रम् ॥

श्री गणेशाय नमः ।
राहुर्दानवमन्त्री च सिंहिकाचित्तवन्दनः ।
अर्धकायः सदाक्रोधी चन्द्रादित्यविमर्दनः ॥ १॥

रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः ।
ग्रहराजः सुधापायी राकातिथ्यभिलाषुकः ॥ २॥

कालदृष्टिः कालरूपः श्रीकण्ठहृदयाश्रयः ।
विधुन्तुदः सैंहिकेयो घोररूपो महाबलः ॥ ३॥

ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः ।
पञ्चविंशतिनामानि स्मृत्वा राहुं सदा नरः ॥ ४॥

यः पठेन्महती पीडा तस्य नश्यति केवलम् ।
आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूंस्तथा ॥ ५॥

ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम् ।
सततं पठते यस्तु जीवेद्वर्षशतं नरः ॥ ६॥

॥ इति श्रीस्कन्दपुराणे राहुपञ्चविंशतिनामस्तोत्रं सम्पूर्णम् ॥